# सप्तदशस्सर्गः

ततः कुमुदखण्डाभो निर्मलं निर्मलोदयः |
प्रजगाम नभश्चन्द्रो हंसो नीलमिवोदकम् || 5.17.1||

साचिव्यमिव कुर्वन्स प्रभया निर्मलप्रभः |
चन्द्रमा रश्मिभिः शीतैः सिषेवे पवनात्मजम् || 5.17.2||

स ददर्श ततः सीतां पूर्णचन्द्रनिभाननाम् |
शोकभारैरिव न्यस्तां भारैर्नावमिवाम्भसि || 5.17.3||

दिदृक्षमाणो वैदेहीं हनूमान्मारुतात्मजः |
स ददर्शाविदूरस्था राक्षसीर्घोरदर्शनाः || 5.17.4||

एकाक्षीमेककर्णां च कर्णप्रावरणां तथा |
अकर्णां शङ्कुकर्णां च मस्तकोच्छ्वासनासिकाम् || 5.17.5||

अतिकायोत्तमाङ्गीं च तनुदीर्घशिरोधराम् |
ध्वस्तकेशीं तथाकेशीं केशकम्बलधारिणीम् || 5.17.6||

लम्बकर्णललाटां च लम्बोदरपयोधराम् |
लम्बौष्ठीं चिबुकौष्ठीं च लम्बास्यां लम्बजानुकाम् || 5.17.7||

ह्रस्वां दीर्घां च कुब्जां च विकटां वामनां तथा |
करालां भुग्नवक्त्राम् च पिङ्गाक्षीं विकृताननाम् || 5.17.8||

विकृताः पिङ्गलाः कालीः क्रोधनाः कलहप्रियाः |
कालायसमहाशूलकूटमुद्गरधारिणीः || 5.17.9||

वराहमृगशार्दूलमहिषाजशिवा मुखाः |
गजोष्ट्रहयपादाश्च निखातशिरसोऽपराः || 5.17.10||

एकहस्तैकपादाश्च खरकर्ण्यश्वकर्णिकाः |
गोकर्णीर्हस्तिकर्णीश्च हरिकर्णीस्तथापराः || 5.17.11||

अतिनासाश्च काश्चिच्च तिर्यङ्नासा अनासिकाः |
गजसंनिभनासाश्च ललाटोच्छ्वासनासिकाः || 5.17.12||

हस्तिपादा महापादा गोपादाः पादचूलिकाः |
अतिमात्रशिरोग्रीवा अतिमात्रकुचोदरीः || 5.17.13||

अतिमात्रास्य नेत्राश्च दीर्घजिह्वाननास्तथा |
अजामुखीर्हस्तिमुखीर्गोमुखीः सूकरीमुखीः || 5.17.14||

हयोष्ट्रखरवक्त्राश्च राक्षसीर्घोरदर्शनाः |
शूलमुद्गरहस्ताश्च क्रोधनाः कलहप्रियाः || 5.17.15||

कराला धूम्रकेशिन्यो राक्षसीर्विकृताननाः |
पिबन्ति सततं पानं सुरा मांससदाप्रियाः || 5.17.16||

मांसशोणितदिग्धाङ्गीर्मांसशोणितभोजनाः |
ता ददर्श कपिश्रेष्ठो रोमहर्षणदर्शनाः || 5.17.17||

स्कन्धवन्तमुपासीनाः परिवार्य वनस्पतिम् |
तस्याधस्ताच्च तां देवीं राजपुत्रीमनिन्दिताम् || 5.17.18||

लक्षयामास लक्ष्मीवान्हनूमाञ्जनकात्मजाम् |
निष्प्रभां शोकसन्तप्तां मलसङ्कुलमूर्धजाम् || 5.17.19||

क्षीणपुण्यां च्युतां भूमौ तारां निपतिताम् इव |
चारित्र व्यपदेशाढ्यां भर्तृदर्शनदुर्गताम् || 5.17.20||

भूषणैरुत्तमैर्हीनां भर्तृवात्सल्यभूषिताम् |
राक्षसाधिपसंरुद्धां बन्धुभिश्च विनाकृताम् || 5.17.21||

वियूथां सिंहसंरुद्धां बद्धां गजवधूम् इव |
चन्द्रलेखां पयोदान्ते शारदाभ्रैरिवावृताम् || 5.17.22||

क्लिष्टरूपामसंस्पर्शादयुक्तामिव वल्लकीम् |
स तां भर्तृहिते युक्तामयुक्तां रक्षसां वशे || 5.17.23||

अशोकवनिकामध्ये शोकसागरमाप्लुताम् |
ताभिः परिवृतां तत्र सग्रहामिव रोहिणीम् || 5.17.24||

ददर्श हनुमांस्तत्र लतामकुसुमाम् इव |
सा मलेन च दिग्धाङ्गी वपुषा चाप्यलङ्कृता || 5.17.25||

मृणाली पङ्कदिग्धेव विभाति च न भाति च |
मलिनेन तु वस्त्रेण परिक्लिष्टेन भामिनीम् || 5.17.26||

संवृतां मृगशावाक्षीं ददर्श हनुमान्कपिः |
तां देवीं दीनवदनामदीनां भर्तृतेजसा || 5.17.27||

रक्षितां स्वेन शीलेन सीतामसितलोचनाम् |
तां दृष्ट्वा हनुमान्सीतां मृगशावनिभेक्षणाम् || 5.17.28||

मृगकन्यामिव त्रस्तां वीक्षमाणां समन्ततः |
दहन्तीमिव निःश्वासैर्वृक्षान्पल्लवधारिणः || 5.17.29||

सङ्घातमिव शोकानां दुःखस्योर्मिमिवोत्थिताम् |
तां क्षामां सुविभक्ताङ्गीं विनाभरणशोभिनीम् || 5.17.30||

प्रहर्षमतुलं लेभे मारुतिः प्रेक्ष्य मैथिलीम् |
हर्षजानि च सोऽश्रूणि तां दृष्ट्वा मदिरेक्षणाम् || 5.17.31||

मुमोच हनुमांस्तत्र नमश्चक्रे च राघवम् |
नमस्कृत्वाथ रामाय लक्ष्मणाय च वीर्यवान् || 5.17.32||

सीतादर्शनसंहृष्टो हनूमान्संवृतोऽभवत् || 5.17.33||

## इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये सुन्दरकाण्डे सप्तदशस्सर्गः।